ePathshala पाठशाला
A Gateway to all Post Graduate Courses

| विषयः (Subject) | संस्कृतम् (Sanskrit) | |
|---|---|---|
| पत्रसंख्या (Paper Number) | 1 | |
| पत्रविषयः (Title) | वैदिकभाषा तथा वाङ्मयं च<br>(Vedic Language & Literature) | |
| पाठ्यांशसंख्या पाठ्यांशनाम<br>(Module Number& Module Name) | 12, सामवेदपरिचयः<br>(An Introduction of *Samaveda*) | |
| पाठ्यांशतत्त्वानि<br>(Focal Points of The Module) | 1. सामवेदस्य परिचयः<br>2. सामवेदीयभाष्यकाराणां परिचयः | |
| प्रमुखान्वेषकः<br>(Principal Investigator) | सह-प्रमुखान्वेषकः<br>(Co-Principal Investigator) | |
| प्रो.रमेशकुमारपाण्डेयः,<br>कुलपतिः, श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | प्रो.वे.कुटुम्बशास्त्री,<br>पूर्वकुलपतिः,राष्ट्रीयसंस्कृतसंस्थानम्,नवदेहली<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वाराणसी<br>सोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः | |
| समन्वयकः<br>(Co-ordinator) | पाठ्यांशलेखकः<br>(Content Writer) | समीक्षकः<br>(Reviewer) |
| प्रो.हरिहरत्रिवेदी,<br>आचार्यः,पौरोहित्यविभागस्य<br>श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठम्, नवदेहली<br>110016 | डा. रामराज उपाध्यायः,<br>सहाचार्यः,पौरोहित्यविभागस्य<br>श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृत-विद्यापीठम्, नवदेहली 110016 | प्रो.पी.एन्.शास्त्री,<br>कुलपतिः,<br>राष्ट्रियसंस्कृतसंस्थानम्<br>नवदेहली |
| पाठ्यांशसंलग्नकम्<br>(Module Tag) | SAN_P1_M12 | |

| आयोजकसंस्था (Anchor Institute) |
|---|
| श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 |

विषयसूची-

## 1.0 प्रस्तावना-

विद्यन्ते धर्मादयः पुरुषार्थाः यैस्ते वेदा इत्यनुसारेण वेदैः धर्मादीनां पुरुषार्थचतुष्टयादीनां च ज्ञानं प्राप्यते । ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन् मनुष्यान् विचिन्त्य चतुर्धा विभाजितम्। येषां नामानि ऋग्वेदः, यजुर्वेदः, सामवेद अथर्ववेदश्च सन्ति। वेदानां क्रमे सामवेदस्य तृतीयं स्थानमस्ति। गीतिषु सामाख्या इत्यनुसारेण सामवेदः गीत्यात्मकोऽस्ति। सूर्यात्सामवेद इत्यनुसारेण सूर्यद्वारा सामवेदस्योत्पत्तिरभवदित्यपि प्राप्यते। मन्त्राणां गानं केन प्रकारेण कर्तव्यं इत्यस्य ज्ञानं सामवेदेन भवति। वर्त्तमाने स्वराणां नामानि यथा सा रे ग म प ध नि इति श्रूयन्ते, एतत्सर्वं सामवेदेनैवोद्भूतमस्ति। यज्ञादीनां सम्पादने यज्ञमण्डपे पश्चिमद्वारस्य द्वारपालादीनां कृत्यानां ज्ञानं सामवेदेन प्राप्यते। वैदिकसाहित्ये सामवेदस्यातीव महत्त्वपूर्णं स्थानमस्ति। सामवेदे मन्त्राणां गानविधयः प्रतिपादितास्सन्ति।

## 2.0 सामवेदस्य परिचयः-

साम्नः वेदः सामवेदः। सामवेदे पदद्वयं प्राप्यते । साम्नः वेदश्च। गीतियुक्तः मन्त्रः साम इति कथ्यते। ऋग्वेदस्य ये मन्त्राः विशिष्टगानपद्धत्या गीयन्ते ते सर्वे साममन्त्रास्सन्ति। गीतिषु सामाख्या इति निर्देशः पूर्वमीमांसायां प्राप्यते। ऋग्वेदे स्तोत्रात्मकाः मन्त्राः गीत्यात्मकाः मन्त्राः आंगुष्यसाम इति नामभिः प्रसिद्धशास्सन्ति। अत्रैवं प्रतीयते साममन्त्राणामुच्चारणकाले अंगुलीनामुपरि सामस्वराणां प्रयोगाः दृश्यन्ते। सामान्यतया एतदर्थमस्य नाम आंगुष्यसाम इति नाम्नाख्यातः। अत्र साम शब्दस्यापि भागद्वयं प्राप्यते। सा च अमश्चेति ततः साम्नः सामत्वम्। अत्र सा शब्दस्यार्थः सा ऋचा अमः नाम स्वरः अर्थात् यस्या ऋचाया उपरि स्वरारोहणं कर्तुं शक्यते तस्या ऋचायाः नाम साम अस्ति। ऋच्यधूढं साम गीयते ।

वेदानां सामवेदोऽहम् इत्युक्त्वा श्रीमद्भगवद्गीतायां सामवेदस्य वैशिष्ट्यं प्रतिपादितम्। ऋक्यजुस्सामाथर्ववेदेषु सामवेदः तृतीयः वेदोऽस्ति। अस्य प्रयोगः यागादीनामवसरे यज्ञमण्डपस्य पश्चिमदिशायां प्रायशो भवति। सामवेदः भागद्वयात्मकोऽस्ति, आर्चिकं गानञ्च। आर्चिकशब्दस्यार्थ ऋचाणं समूहो विद्यते। आसां ऋक्समूहाणामपि भागद्वयं प्राप्यते, पूर्वार्चिकमुत्तरार्चिकञ्च। पूर्वार्चिके षट्प्रपाठकाः भवन्ति। प्रत्येकस्मिन् प्रपाठके खण्डद्वयं प्राप्यते। प्रत्येकेषु खण्डेषु दशती भवति। प्रत्येकासु दशतीषु ऋचः विद्यन्ते। एषु प्रथमपंचप्रपाठकानाम् ऋचः ग्रामगानेति नाम्नः ख्यापिताऽस्ति। षष्ठप्रपाठकस्य ऋच आरण्यगानेति नाम्नः ज्ञायते।

प्रपाठकेष्वेषु पंचाशदुत्तरषट्शतंसंख्यकाः मन्त्रास्सन्ति। उत्तरार्चिके नव प्रपाठकाः भवन्ति। प्रथमपंचप्रपाठकेषु द्वौ- द्वौ भागौ स्तः। अन्तिमेषु चतुर्षु प्रपाठकेषु त्रयः-त्रयः अर्धकास्सन्ति। उत्तरार्चिकस्य समग्रमन्त्रसंख्या पंचविंशत्युत्तरद्वादशशतम् अस्ति। आर्चिकद्वयेषु सम्मिलितानां मन्त्राणां संख्या पंचसप्तत्युत्तराष्टादशशतम् अस्ति।




### 3.0 सामवेदस्य महत्त्वम्

यो जागारः तमु सामानि आयान्तीत्यनेन यः जनः जागरणशीलोऽस्ति तस्य पार्श्वे एव साम्नः ज्ञानं भविष्यति । साममन्त्राणां प्रयोगेण देवानां प्रीतिर्भवति। अस्य कारणमस्ति गानम्। सामवेदीयमन्त्राणां गानैः सर्वाणि साध्यन्ते। सामवेदीयब्राह्मणे प्राप्यते- स वा इदं विश्वं

भूतमसृजत्। तस्य सामोपजीवनं प्रायच्छत्। अर्थादत्र साम उपजीवनमस्ति। सम्यक् जीवनाय साम्नः ज्ञानं भवेदिति तात्पर्यमस्ति। सामस्वराणां प्रदर्शनावसरे सर्वेषां स्वराणां ग्रामाणां च विवरणं प्राप्यते। सामस्वरबोधकतालिकानुसारेण सामवेदे सप्तस्वराः निगदिताः। नारदीयशिक्षायामपि प्राप्यते-

**सप्तस्वराः त्रयो ग्रामाः मूर्छनास्त्वेकविंशतिः।**
**ताना एकोनपञ्चाशत् इत्येतत् स्वरमण्डलम्।।**

अत्र सप्तस्वराणां विषये प्राप्यते-

**षड्जश्च ऋषभश्चैव गान्धाशरो मध्यमस्तथा।**
**पञ्चमो धैवतश्चैव निषादः सप्तमः स्वराः।।**

गानस्योद्भावकोऽस्त्ययं वेदः। गाने के - के स्वराः प्रयुज्यन्ते तेषां समेषां विषये ज्ञानमनेन सामवेदेन प्राप्यते। यथा- प्रथमः स्वरो विद्यते षड्जः। स्वरस्यास्य स्वरबोधकवर्णः सा इत्यस्ति। स्वरेणानेन देवानां तृप्तिर्भवति। पद्मपुष्पेवास्य स्वरस्य वर्णः अस्ति। मयूरादागतोऽयं स्वरः। स्वरोत्पत्तिस्थानं कण्ठो विद्यते। स्वरस्यास्य प्रथमं गानमग्निनाभवत्। अस्य स्वरस्य देवता ब्रह्मा विद्यते। स्वरस्यास्योच्चारणस्थानानि नासिकाकण्ठतालुहृदयजिह्वादन्ताः सन्ति। अस्य स्वरस्योच्चारणस्य प्रत्यक्षसंबंधः प्रकृत्या सह विद्यते। प्रकृतौ वनस्पतयः पशुपक्ष्यादयः भवन्ति। अस्य स्वरस्य संबंधः मयूरेण सह दृश्यते। पद्मपुष्पेति वनस्पत्यादयः स्वीक्रियन्ते। इति हेतुना अत्र वक्तुं शक्यते षड्जस्वरस्य संबंधः सर्वैस्सह प्राप्यते।

सामवेदस्य द्वितीयः स्वरो विद्यते ऋषभः स्वरः। स्वरस्यास्य स्वरबोधकवर्णः रे इत्यस्ति। स्वरेणानेन ऋषीणां तृप्तिर्भवति। शुकपक्षीवास्य स्वरस्य वर्णः अस्ति। गोरादागतोऽयं स्वरः। स्वरोत्पत्तिस्थानं शिरो विद्यते। स्वरस्यास्य प्रथमं गानं ब्रह्मणा कृतम्। अस्य स्वरस्य देवता अग्निः ज्ञायते। स्वरस्यास्योच्चारणस्थानानि नाभिकण्ठादयस्सन्ति।

सामवेदस्य तृतीयः स्वरो विद्यते गान्धारः। स्वरस्यास्य स्वरबोधकवर्णः ग इत्यस्ति। स्वरेणानेन पितृणां तृप्तिर्भवति। सुवर्णस्येवास्य स्वरस्य वर्णः अस्ति। अजादाविकाद्वागतोऽयं स्वरः। स्वरोत्पत्तिस्थानमनुनासिकं विद्यते। स्वरस्यास्य प्रथमं गानं सोमद्वारा अभवत्। अस्य स्वरस्य देवता गौ विद्यते।

चतुर्थः स्वरोऽस्ति मध्यमः। स्वरस्यास्य स्वरबोधकवर्णः म इत्यस्ति। स्वरेणानेन गन्धर्वाणां तृप्तिर्भवति। कुन्दपुष्पेवास्य स्वरस्य वर्णः अस्ति। क्रौञ्चादागतोऽयं स्वरः।

स्वरोत्पत्तिस्थानं हृदयं विद्यते। स्वरस्यास्य प्रथमं गानं विष्णुना कृतम्। अस्य स्वरस्य देवता ब्रह्मा अस्ति।

पञ्चमः स्वरो विद्यते पञ्चमः। स्वरस्यास्य स्वरबोधकवर्णः प इत्यस्ति। स्वरेणानेन देवपितृऋषीणां तृप्तिर्भवति। कृष्णवर्णस्येवास्य स्वरस्य वर्णः अस्ति। कोकिलादागतोऽयं स्वरः। स्वरोत्पत्तिस्थानं कण्ठहृदयञ्च विद्येते। स्वरस्यास्य प्रथमोच्चारणं नारदेना कृतम्। अस्य स्वरस्य देवता सोमो ज्ञायते।

षष्ठः स्वरो विद्यते धैवतः। स्वरः अस्य स्वरबोधकवर्णः धा इत्यस्ति। स्वरेणानेन यक्षाणां तृप्तिर्भवति। पीतवर्ण इवास्य स्वरस्य वर्णमस्ति। अश्वादागतोऽयं स्वरः। स्वरोत्पत्तिस्थानं मस्तकं विद्यते। स्वरस्यास्य प्रथमं तुम्बुरुऋषिणा गानं कृतम्। अस्य स्वरस्य देवता आदित्यो विद्यते।

सप्तमः स्वरोऽस्ति निषादः। स्वरस्यास्य स्वरबोधकवर्णः नि इत्यस्ति। स्वरेणानेन भूतसमुदायानां तृप्तिर्भवति। सप्तरंगीयवर्णस्येवास्य स्वरस्य वर्णः अस्ति। हस्तिमाध्यमेनागतोऽयं स्वरः। स्वरोत्पत्तिस्थानं सन्धयस्सन्ति। स्वरस्यास्य प्रथमं गानं तुम्बुरु ऋषिणा कृतम्। अस्य स्वरस्य देवता आदित्यो विद्यते।

उपर्युक्तेन सामवेदीयस्वरमाध्यमेनैवं जीवानां विकासः भवतीति प्रतिभाति । सामवेदीय मन्त्राणां गायनेनोच्चारणेन वा ध्वनितरंगः प्रसारितो भवति। तेन ध्वनितरंगेन अस्माकं पर्यावरणं शुद्धं भवति। पर्यावरणे शुद्धे सत्येव सम्यक् जीवनं भवितुं शक्यते। अशुद्धे पर्यावरणे शरीरः रोगयुक्तो भवति येनाल्पायुवन्तः जनाः भविष्यन्ति।

यागादीनामनुष्ठाने सामवेदीयमन्त्रणां प्रयोगेण देवाः शीघ्रं प्रसीदन्ति। तस्यानुष्ठानेन जनाः फ़लान्वितो भवन्ति। अनेन प्रकारेण महदुपकारकमस्ति सामवेदः।

### 4.0- सामभाष्यकाराः

मन्त्राणां सुगमतापूर्वकमर्थज्ञानाय भाष्यं क्रियते। भाष्यं ये कुर्वन्ति आचार्याः ते भाष्यकाराः भवन्ति। सर्वे सर्वं न जानन्ति इति प्रसिद्धेन वाक्येनैवं प्रतीयते भाष्यकाराः भिन्नाः- भिन्नाः भवन्ति। यः भाष्यकारः यस्य वेदस्य भाष्यं करोति तस्य भाष्यकारस्य नाम तेन सह संपृक्तो भवति। यथा ऋग्वेदस्य भाष्यं य आचार्यः करोति तस्य नाम ऋग्वेदभाष्यकारो भवति। तेनैव प्रकारेण सामवेदस्य भाष्यं ये कुर्वन्ति ते सामभाष्यकाराः भवन्ति। अत्रास्मिन् प्रकरणे सामवेदस्य भाष्यकाराणां विषये वयं ज्ञानार्जनं कुर्मः।

### 4.1 सायणाचार्यः

आचार्यसायणस्य पितुर्नाम मायणः, मातुर्नाम श्रीमती, अग्रजस्य नाम माधवः एवं कनिष्ठभ्रातुर्नाम भोगनाथ आसीत्। सायणः विजयनगरस्य महाराजस्य बुक्कस्य महामात्यम् आसन्। इमे आचार्याः नैके आचार्यैः सह चतुर्षु वेदेषु महत्त्वपूर्णं प्रामाणिकंच भाष्यं लिखितवन्तः। सामवेदस्य कौथुमशाखोपरि तथा च सामवेदस्य ब्राह्मणग्रन्थानामुपरि स्वकीयं भाष्यं लिखितवान्। अन्येषु वेदेष्वस्याचार्यस्य भाष्यं प्राप्यते एतदर्थं स्वतंत्ररूपेण सामभाष्यकाराणां मध्ये सायणस्य नाम नास्ति। परंच सामभाष्यं कृतम् एतदर्थमत्र आचार्यसायणस्योल्लेख मया कृतः।

### 4.2 माधवः

ग्रन्थानामनुसारेण सामवेदस्य प्रथमो भाष्यकारः माधवः प्रतीयते। अस्याचार्यस्य कालः षष्ठ्यां शताब्द्यां प्राप्यते। एतेषां भाष्यं सामवेदस्योभयोरार्चिकयोपरि प्राप्यते। आचार्यमाधवस्य पितुर्नाम नारायण आसीत्। माधवस्य भाष्यस्य नाम विवरणमिति प्राप्यते। छन्दार्चिकस्य भाष्यस्य नाम छन्दसिकाविवरणम् इति ख्यातमस्ति। उत्तरार्चिकस्य भाष्यस्य नाम उत्तरार्चिकविवरणम् इति ख्यातमस्ति। इदानीं पर्यन्तमिदं भाष्यम् अमुद्रितमस्ति। प्रसिद्धसामज्ञाः आचार्याः सत्यव्रतसामश्रमीमहोदयाः वदन्ति यत् सायणभाष्यस्य संस्करणेऽप्यस्य भाष्यस्यांशाः प्राप्यन्ते। तत्र टिप्पणीरूपेणापि प्राप्यते। माधवस्येदं भाष्यमतीवमहत्त्वपूर्णमस्ति।

### 4.3 भरतस्वामी

भरतस्वामिमहोदयानां सामसंहितोपरि भाष्यं प्राप्यते। भाष्यमिदमप्यप्रकाशितमस्तीति लिख्यते। आचार्याणां भरतस्वामिमहोदयानां भाष्ये स्ववंशस्य परिचयः प्राप्यते। तदनुसारेण कश्यपगोत्रीयोऽयं आचार्यः। अस्य पितरौ नामनी यज्ञदादेवीनारायणश्चासीत्। अनेन आचार्येण सामवेदस्य सर्वेषां ऋचामुपरि व्याख्या कृताः। स्वकीयस्य ग्रन्थस्यारम्भे स्ववंशपरिचयात्मको श्लोक इत्थं प्राप्यते-

नत्वा नारायणं तातं तत्प्रसादादवाप्तधीः।
साम्नां श्री भरतस्वामी काश्यपो व्याकरोदृचम्।
होसलाधीश्वरे पृथ्वीं रामनाथे प्रशासति।
व्याख्या कृतेयं क्षेमेण श्रीरंगे वसता मया।।

भरतस्वामिमहोदयानां भाष्यमतीव संक्षिप्तरुपेणास्ति। पूर्वभाष्यकारात् आचार्यमाधवात् स्वकीये भाष्ये पर्याप्तं साहाय्यं नीतवन्त आचार्याः भरतस्वामिहोदयाः।

### 4.4 गुणविष्णुः

गुणविष्णुमहोदयाः साममन्त्राणां भाष्यकारास्सन्ति। मिथिलायां बंगप्रदेशे चातीवप्रसिद्धस्सन्त्येते। सामवेदीयमन्त्राणां नित्यनैमित्तिकविधानीनामुपयोगे अस्य महोदयस्येदं भाष्यमतीवमहत्त्वपूर्णमस्ति। अस्य महोदयस्य छान्दोग्यमन्त्रभाष्यस्यैकं सुष्ठु संस्करणं कलकत्तासंस्कृतपरिषद्राम्नः संस्थातः प्रकाशितमस्ति। ग्रन्थस्यास्य प्रस्तावनायां सम्पादकेन गुणविष्णुमहोदयेन नैकेषां महदुपकारकाणां विषयाणां विवेचनं कृतमस्ति। छान्दोग्यमन्त्रभाष्यं गुणविष्णुमहोदयानां कृतिरस्ति। मन्त्रब्राह्मण- भाष्यं पारस्करगृह्यसूत्रभाष्यंचाप्यस्याचार्यस्य कृतिः मन्यते।

### 5.0 सामवेदस्य शाखाः

तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं चतुर्धा व्यस्य ऋक्यजुस्सामाथर्वाख्यान् चतुरो वेदान् पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमादुपदिदेश इत्यनेनैवं ज्ञायते सामवेदस्याद्याचार्यरुपेण जैमिनिमहोदयाः स्वीकृतास्सन्ति। आचार्यजैमिनिः स्वपुत्रं सुमन्तुं सामवेदस्य ज्ञानं प्रददात्। सुमन्तोरात्मजः सुन्वान्महोदयानां पार्श्वे इदं ज्ञानमगच्छत्। सुन्वान्महोदयस्यात्मजः सुकर्मामहोदयानां पार्श्वे सामवेदस्य ज्ञानमागतवान्। सामवेदस्य विपुलप्रसारस्य श्रेयः आचार्यान् सुकर्मामहोदयान् प्रति गच्छति। महोदयस्यास्य द्वौ शिष्यौ स्तः। हिरण्यनाभकौश्यंजिः तथा पौष्यंजिः। आभ्यां महोदयाभ्यां सामवेदस्य द्वे धारे विनिःसृतौ प्राच्योदिच्यश्च। प्रश्नोपनिषदि हिरण्यनाभमहोदयाः कौशलदेशीयराजपुत्रस्सन्ति। श्रीमद्भागवतमहापुराणेऽपि सामगानां परम्पराद्वयस्योल्लेखं मिलति। प्राच्यसामगा उदिच्यसामगाश्च। हिरण्यनाभस्य शिष्यः पौरववंशीयः राज्ञां सन्नतिमान् महोदयस्य पुत्रः कृत आसीत्। येन अस्याः संहितायाः स्विशष्यैस्सह चतुर्विंशतिः प्रकारेण प्रवर्त्तनं कृतम्। वैदिकवाङ्मयस्येतिहासे लिख्यते अस्य विवरणं मत्स्यपुराणे, हरिवंशपुराणे, विष्णुपुराणे, वायुपुराणे, ब्रह्माण्डपुराणे भागवतमहापुराणे च सामान्यरूपेण प्राप्यते। वायुपुराणे ब्रह्माण्डपुराणे च कृतमहोदयानां चतुर्विंशतिर्शिष्याणां वर्णनं प्राप्यते। कृतमहोदयस्य शिष्याणां संज्ञा कार्त्ता इत्यनेन ख्यापिता अस्ति।

**चतुर्विंशतिधा येन प्रोक्ता वै सामसंहिताः।**
**स्मृतास्ते सामगाः प्राच्याः कार्त्ता नाम्नेह सामगाः।**

येषु शिष्येषु पंचशिष्याणामुल्लेखः श्रीमद्भागवते प्राप्यते। येषां पंचशिष्याणां नामानि क्रमशः लौगाक्षि-मांगलि-कुल्य-कुसीद-कुक्षि इत्यादयस्सन्ति। प्रतिशिष्यं सामसंहितायाः शतं-शतमध्यापनमकारयत्। सहस्रवर्त्मा सामवेदः इत्यनेन प्रतिभाति सामवेदस्य सहस्रः शाखाः आसन्। चरणव्यूहसूत्रे जैमिनीगृह्यसूत्रे च त्रयोदशशाखानां विवरणं प्राप्यन्ते। सामतर्पणावसरे उल्लेखः प्राप्यते- राणायणसात्यमुग्रिव्यासभागुरिऔलुण्डिगौल्मुलविभानुमा-नोपमन्यवकाराटिमशकगार्ग्यवार्षगण्यकौथुमिशालिहोत्रजैमिनी इत्येते आचार्याः सामगास्सन्ति। सम्प्रति सामवेदस्य तिस्रः शाखाः प्राप्यन्ते। येषां नामानि सन्ति कौथुमी, राणायनीया जैमिनीया च।

## 6.0 कौथुमशाखा

कौथुमीया शाखा सामवेदस्यातिप्रसिद्धशाखा अस्ति। अस्याः शाखायाः विभाजनं अध्यायरूपेण, खण्डरूपेण मन्त्ररूपेणचास्ति। कौथुमशाखाया एवैका शाखा ताण्ड्यशाखा विद्यते। अस्याः विशालकायं ब्राह्मणं ताण्ड्यमहाब्राह्मणमस्ति। अस्यैव ब्राह्मणस्यापरनाम पंचविंशब्राह्मणं प्रौढब्राह्मणंचास्ति। भगवत्पादश्री शंकराचार्यैः वेदान्तभाष्ये ताण्ड्यशब्दस्य बहुबारमुल्लेखः कृतः। वैदिकसाहित्यस्येतिहासे प्राप्यते कौथुमशाखायाः प्रचारः प्रसारः गुर्जरेदेशे विद्यते। सामवेदीयशाखासु कौथुमीयाशाखा सर्वाधिकोपादेया अस्ति।

## 7.0 राणायणीयशाखा

सामवेदस्य द्वितीया शाखा राणायणीया शाखा अस्ति। कौथुमीयाराणायनीया उच्चारयन्ति तत्र राणायणीया जनाः हावु राइ इत्यादय उच्चारयन्ति। राणायणीया शाखामध्ये एका सात्यमुग्रिशाखा विद्यते। महाभाष्ये प्राप्यते सात्यमुग्रिजनाः एकारस्योकारस्य च स्थाने ह्रस्वोच्चारणं कुर्वन्ति। छन्दोगानां सात्यमुग्रिराणायणीया ह्रस्वानि पठन्ति। ननु च भोश्छन्दोगानां सात्यमुग्रि राणायणीया------- अर्धमोकारं च अधीयते। सुजाते ए अश्वसूनृते। अध्वर्वो ओ अद्रिभिः सुतम्।

## 8.0 जैमिनीयशाखा

वैदिकवाङ्मयस्येतिहासे लिखितमस्ति जैमिनिशाखायाः समग्रांशाः ब्राह्मण-श्रौत-गृह्यसूत्रसहिताः प्राप्यन्ते। जैमिनीयसंहिता लाहौरनगरात् प्रकाशिता जता। अस्यां संहितायां मन्त्राणां संख्या 1687 (सप्ताशीत्युत्तरषोडशशतं) वर्तते। तवलकारशाखा जैमिनीयशाखाया अवान्तरशाखा अस्ति। जैमिनीमहोदयस्य शिष्य आसन् तवलकारमहोदयाः ।

जैमिनीयसामगानस्य प्रथमं प्रकाशनं संस्कृतविश्वविद्यालयवाराणसीतः जातः। आग्नेयः, एन्द्रः पवमानश्चैते त्रयो भागास्सन्ति । कौथुमीसंहितातः जैमिनीयसामसंहितायाः पाठे सर्वथा भेदो नास्ति।

## 9.0 सामगानस्य पद्धतिः

सामगानंतु चतुर्धा प्राप्यते।

1.ग्रामगानम्- अस्यापरनाम वेयगानं प्रकृतिगानं वा विद्यते।

2.आरण्यकगानम्- अस्यापरनाम ऊहगानमस्ति।

3.ऊह्यगानम्

4.रहस्यज्ञानम्।

सामवेदे पूर्वार्चिकस्य प्रथमतः पंचमाध्यायगतमन्त्राणामुपरि वेयगानं भवति। आरण्यके पर्वणि प्राप्तानां मन्त्राणामुपरि आरण्यकगानं भवति। ऊहगानमूह्यगानंचोत्तरार्चिके उल्लिखितानां मन्त्राणामुपरि क्रियते। विभिन्नशाखानुसारेण मन्त्राः भिन्नाः भिन्नास्सन्ति। यथा-

| गानानि | कौथुमीयगानम् | | जैमिनीयगानम् | |
|---|---|---|---|---|
| वेयगानानि | 1197 | (सप्तनवत्युत्तरैकादशसशतम्) | 1232 | (द्वात्रिंशदुत्तरद्वादशशतम्) |
| अरण्यगानानि | 294 | (चतुर्नवत्युत्तरद्विशतम्) | 291 | (एकनवत्युत्तरद्विशतम्) |
| ऊहगानानि | 1026 | (षड्विंशत्युत्तरैकसहस्रम्) | 1802 | (द्विरुत्तराष्टादशशतम्) |
| ऊह्यगानानि | 205 | (पञ्चोत्तरद्विशतम्) | 356 | (षट्पञ्चाशदुत्तरत्रिशम्) |
| सम्पूर्ण योगम् | 2722 | (द्वाविंशत्युत्तरसप्तविंशतिशतम्) | 3681 | (एकाशीत्युत्तरषड्विंशतशतम्) |

सामवेदीयमन्त्राणामुपरि 1, 2, 3 इत्यादि संख्याः विलिख्यन्ते। अत्र एक इत्यंकस्य उदात्तः स्वरो भवति। द्वि अंकस्य स्वरितः स्वरो भवति। त्रि इत्यंकस्य अनुदात्तः स्वरो भवति। ऋग्वेदीयऋचामुपरि उदात्तस्य किमपि संकेतः न भवति। सामवेदे उदात्तस्य कृते एका संख्या प्रयुज्यते। ऋग्वेदस्य स्वरितवर्णस्योपरि ऋजुरेखा भवति। सामवेदे तस्य कृते 2 इति संख्या प्रयुज्यते। अनेन प्रकारेण अनुदात्तस्य स्थाने वर्णस्याधोभागे एका तिर्यक् रेखा क्रियते। उदात्तानन्तरे अनुदात्तोपरि स्वरितस्य संकेतः भवति। स्वरितानन्तरे अनुदात्तवर्णः संकेतशून्यो भवति । प्रकारेणानेन सामवेदे द्वि संख्यानन्तरमनुदात्तवर्णः भवेत् चेत् तस्योपरि अंकस्य प्रयोगः

न भविष्यति। रिक्तः तत्र भविष्यति। एतादृशाणां रिक्तवर्णानां संज्ञा प्रचयो भवति। अस्योच्चारणम् एकमेव स्वरेण सह क्रियते।

वैदिकवङ्मयस्येतिहासे गाने षट्विकाराः लिखितास्सन्ति परंचाष्टौ विकाराः सामगाने भवन्ति, येषां नामानि विकारः, विश्लेषणम्, विकर्षणम्, अभ्यासः, विरामः, स्तोभः, आगमः लोपश्च सन्ति।

**विकारः-** अस्मिन् गाने परिवर्तनं भवति। यथा मूले अग्निम् अस्ति तर्हि तस्मिन्नस्थाने ओग्नाइ भवति।

**विश्लेषणम्-** एकपदस्य पृथक्करणम्। यथा मूले वीतये इति पदमस्ति तर्हि तस्मिन्नस्थाने वो इ तो या इ भविष्यति।

**विकर्षणम्-** एकस्वरस्य दीर्घकालपर्यन्तमुच्चारणं विकर्षणमस्ति। यथा- ये इत्यस्य उच्चारणे या 2 3 यि।

**अभ्यासः-** कस्यापि पदस्य पौनःपुन्येनोच्चारणमभ्यासो विद्यते। यथा- तोयायि पदमस्ति तत्र तोयायि तोयायि इत्युच्चार्यते।

**विरामः-** सौकर्याय कस्यापि पदस्य मध्ये विरामः। यथा गृणानि हव्यदातये इत्यस्मिन् पदे हकारोपरि विरामः भविष्यति। अर्थात् गृणानोह व्यदातये।

**स्तोभः-** औहोवा इत्यादिपदानां प्रयोगः।

**आगमः-** पदानां मध्ये कस्याप्यन्यस्य वर्णस्यागमनम् आगम अस्ति।

**लोपः-** कस्यापि पदस्य अदर्शनं लोपो भवति। यथा- प्रचोदयादिति पदे प्रचो हुम् इत्युच्चार्यते।

### 10.0 सामवेदे वर्ण्यविषयाः

सामवेदः मुख्यरूपेण उपासनायाः वेद अस्ति। अस्मिन् मुख्यतया अग्नि- इन्द्र- सोमदेवतानां कृते संबद्धाः मन्त्रासन्ति। सोमयागसंबंधिपवमानसंबंधि च मन्त्राणां संख्या अधिका अस्ति। सामवेदस्य पूर्वार्चिके अग्नीन्द्रपवमानसोमादिसंबंधितानां मन्त्राणां संकलनमस्ति। वर्ण्यविषयदृष्ट्या सामवेदे रुचिकराणि तथ्यानि प्राप्यन्ते। अस्य प्रारम्भः शान्तरसेन भवति। सामवेदस्य प्रथमः मन्त्र अस्ति अग्न आयाहि वीतये गृणानो हव्यदातये। अस्मिन् मन्त्रे अग्नेः स्तुतिरस्ति। सामवेदस्य समाप्तिः वीररसेन भवति। अस्मिन् सूक्ते सप्तविंशतिः मन्त्रास्सन्ति। अस्मिन् इन्द्रस्य वर्णनं योद्धा इव प्रतीयते। अयं इन्द्रः शत्रुसैनिकैः सह युद्धं करोति। सर्वोपरि विजयः प्राप्नोति। प्रकारेणानेन सामवेदस्य मन्त्रेषु ज्ञानप्रदायकाः विचाराः प्राप्यन्ते।

## 11.0 सामगानप्रकारः

सामगानं चतुर्धा विभज्य। प्रथममस्ति ग्रामेगेयगानम्। अस्य गानस्य नाम वेयगानमप्यस्ति। प्रकृतिगानमप्यस्यैव गानस्य नाम विद्यते। अस्य गानस्य प्रयोगः ग्रामे भवति उतवा सार्वजनिके स्थले भवति। सामवेदे गानानां स्थलानि निर्धाशारितानि सन्ति । तस्मिन्नेवस्थले तस्य गानस्य प्रयोगः यथानिर्देशारित्या कर्त्तव्य इति नियमः विद्यते।

द्वितीयमस्ति आरण्यगानम्। अस्यापरनाम विद्यते आरण्यकगानम्। अस्यगानस्य नाम रहस्यगानमप्यस्ति। अस्य गानस्योच्चारणं वनेषु पवित्रस्थलेषु वा क्रियते अरण्यकांडे सामयोनिमन्त्राणां संज्ञा छन्दसी भवति। अस्य गानस्य नाम छान्दस अस्ति।

तृतीयं गानमस्ति ऊहगानम्। अस्य तात्पर्यमस्ति विचारपूर्वकं गानानां विन्यासः। अस्मिन् पूर्वाचिकेन सह संबर्द्धानाम् उत्तरार्चिकानां गानमनेन विधिना भवति। सोमयागस्यावसरे अथवा विशिष्टधार्मिकावसरे अस्य गानस्य गायनं क्रियते। ऊहगानं प्रकृतिगानमस्ति। पूर्वार्चिकस्याग्नेयादिकाण्डानां मन्त्राणामुपरि ऊहगानं निर्धारितमस्ति।

चतुर्थं गान रहस्यगानम्। गानस्यास्य सर्वत्र उच्चारणं न क्रियते। सर्वसाधारणानां जनानां सन्निधौ अस्य गानस्योच्चारणं निषिद्धमस्ति।

सामवेदे गेयानां मन्त्राणामुपर्येव सामगानानि प्राप्यन्ते। सर्वेषां मन्त्राणामुपरि गानानि न प्राप्यन्ते। यथा यत्र बाणाः सम्पतन्तीति मन्त्रस्योपरि गानं नास्ति। भद्रं कर्णेभिरिति मन्त्रस्य अपि गानं नास्ति। अनेन प्रकारेण विविधानि स्थलानि सन्ति।

## 12.0 स्तोमस्तथा विष्टुतिः

शस्त्रस्तोत्रयोर्मध्ये अन्तरं भवति। शस्त्रस्य लक्षणमस्ति- अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम्। गायनं विना मन्त्रेण सम्पादिता स्तुतिः। गीतमन्त्रसाध्यास्तुतिः। स्तुतिः सामवेदे भवति, शस्त्रम् ऋग्वेदे भवति। स्तुतिशब्दस्य प्रकारान्तरेण नाम स्तोम अस्ति। स्तोमानां प्रयोगः विशद्तया ताण्ड्यमहाब्राह्मणे प्राप्यते। तत्र विविधानां स्तोमानां वर्णनं दृश्यन्ते। यथा त्रिवृतस्तोमः, पंचदशस्तोमः, सप्तदशस्तोमः, एकविंशस्तोम इत्यनेन प्रकारेण स्तोमानां प्रयोगः यज्ञे क्रियते। स्तोमोऽयं तृचामुपरि भवति। तृचि त्रिपर्याये गानस्य नियमोऽस्ति। तृतीयपर्याये एव स्तोमस्य स्वरूपं निष्पन्नं भवति। अस्यां वृत्तिजन्यगानप्रकारस्य संज्ञा विष्टुतिरस्ति। विशेषस्तुतिः विष्टुति भवति।

## 13.0 सामविभागः

ऋचा गायनस्य यो विधिः सामवेदे प्रतिपादित अस्ति सः क्लिष्टो विद्यते। विधीनां सम्यक् ज्ञानाय अध्ययनस्यावश्यकता अस्ति। सामान्यरूपेण सामगानस्य पंचविभागाः निर्धारितास्सन्ति। विशिष्टरूपेण सप्तविभागास्सन्ति। सप्तविभागानां विवरणं छान्दोग्योपनि- षदि प्राप्यते। प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानां सामान्यतया पंचविभागास्सन्ति। सप्तविभागे आदौ हिंकारस्य वर्णनमस्ति। एवं प्रस्तावविभागानन्तरमादिरस्ति तृतीयो विभागः। एवं प्रकारेण सप्तपंचविभागयोर्मध्ये भेदः दृश्यते। अत्र समेषां सामविभागानां विवरणमीत्थमस्ति।

**1.प्रस्तावः-** सामान्यरूपेण पंचविभागानां मध्ये अस्य विभागस्य प्रथमं स्थानमस्ति। प्रस्तावोऽयं हुं शब्देन प्रारभ्यते। प्रस्तोता नामकं ऋत्विजम् अस्य विभागस्य गायनं करोति।

**2.उद्गीथः-** अस्य सामविभागस्य गायनम् उद्गाता नामकं ऋत्विजम् करोति। अस्यारम्भः ॐ शब्देन क्रियते।

**3.प्रतीहारः-** प्रतिहारशब्दस्यार्थः संकलनकर्ता अस्ति। अस्य सामविभागस्य गायनं प्रतिहर्ता नामकं ऋत्विजम् करोति। अस्य गानस्य यदा कदा खण्डद्वयमपि भवति।

**4.उपद्रवः-** अस्य सामविभागस्य गायनं उद्गाता नामकं ऋत्विजम् एव करोति। सामान्यगानविभागे उपद्रवनाम्नः गायनस्य स्थानं चतुर्थमस्ति।

**5.निधनः-** सामगानस्य विभागे अस्य गानस्य स्थानं पंचममन्तिमं वा अस्ति। अस्य गानस्य गायनं प्रस्तोता, उद्गाता, प्रतिहर्ता इति त्रयो मिलित्वा कुर्वन्ति।

अत्रैकेन मन्त्रोदाहरणपूर्वकं वयं पश्यामः। अग्न आयाहि वीतये गृणानो हव्य दातये। निहोता सत्सि बर्हिषि। अस्यमन्त्रस्योपरि गायने लिखितानां पंचविधीनां प्रयोगः एवमेव क्रियते।

1.हुं ओग्नाइ - इत्यस्योच्चारणं प्रस्तोता करोति। अयं प्रस्तावनाम्नः सामविभाग अस्ति।

2.अग्नआयाहि वीतये गृणानो हव्यदातये। इत्यस्योच्चारणम् उद्गातानामकं ऋत्विजम् करोति। अयमुद्गीथनाम्नः द्वितीयः सामविभाग अस्ति।

3.नि होता सत्सि बर्हिषि ओम्। इत्यस्योच्चारणं प्रतिहर्त्ता नाम्न ऋत्विजः करोति। अयं प्रतिहारनाम्नः तृतीयो विभाग अस्ति।

4.नि होता सत्सिव। अस्योच्चारणमुद्गाता करोति। अयं उपद्रवनाम्नः सामविभागो वर्तते।

5. हिंषि ओम्। अस्योच्चारणं प्रस्तोताउद्गाताप्रतिहर्त्ता इति त्रयो मिलित्वा कुर्वन्ति। अयं निधननाम्नः सामविभागोऽस्ति।

अनेन प्रकारेण वारत्रयमुच्चारणे स्तोम संज्ञा भवति। यस्य सामान्यार्थः स्तोत्रमस्ति। गायनकाले स्वाराणां विकृतिरपि भवति। यथा अग्निः अस्ति मूलं तर्हि तत्र ओग्नाइ इति परिवर्तितः स्वरूपो भवति। गायने स्वराणां परिपूर्त्तये यदा कदा निरर्थकादिपदानां प्रयोगः भवति। यथा औहोवा, हाउवा इत्यादयः। एतेषां नामान्यपि स्तोमः विद्यते।

